मांश्च संग्रामशेषः स बभूव राजन् ॥ ८ ॥ तदद्भुतं शैल इवा-प्रकम्प्यो वर्षं महाशैलसमानरूपः । विध्वंसयामास रणे नरेन्द्र वैकर्त्तनः शत्रुगणावमर्द्दी ॥ ९ ॥ स तोमरैर्वज्रनिपाततुल्यैः शितैः शरैः काञ्चनचित्रपुङ्खैः । शत्रून् व्यपोहन् समरे महात्मा वैकर्त्तनः पुत्रहितैरतस्थे ॥ १० ॥ संच्छिन्नभिन्नध्वजिनश्च केचित्तीक्ष्णैः शरैरर्द्दितभिन्नदेहाः । केचिद्विसूता विहयाश्च केचिद्वैकर्त्तनेनाशु कृता बभूवुः ॥ ११ ॥ अविन्दमानस्त्वथ शर्म्म शत्रुं यौधिष्ठिरं तद्बलमभ्यपद्यत । तान् प्रेक्ष्य भग्नान् विमुखीकृतांश्च घटोत्कचो रोषमतीव चक्रे ॥ १२ ॥ आस्थाय तं काञ्चनरत्नचित्रं रथोत्तमं सिंहवत् संननाद । वैकर्त्तनं कर्णमुपेत्य चापि विव्याध वज्र-प्रतिमैः पृषत्कैः ॥ १३ ॥ तौ कर्णिनाराचशिलीमुखैश्च नालीक-दण्डाशनिवत्सदन्तैः । वराहकर्णैः सविषाणशृङ्गैः क्षुरप्रसङ्घैश्च ववर्षतुः खम् ॥ १४ ॥ तद्बाणवर्षावृतमन्तरीक्षं तिर्य्यग्गताभिः समरे रराज । सुवर्णपुङ्खज्वलितप्रभाभिर्विचित्रपुष्पाभिरिव स्रजोभिः ॥ १५ ॥ समं हि तावप्रतिमप्रभावावन्योऽन्यमाजघ्नतु-रुत्तमास्त्रैः । तयोर्हि वीरोत्तमयोर्न कश्चिद्ददर्श तस्मिन् समरे विशेषम् ॥ १६ ॥ अतीव तं चित्रमतुल्यरूपं बभूव युद्धं रवि-भीमसून्वोः । समाकुलं शस्त्रनिपातघोरं दिवीव राहंशुमतोः प्रदीप्तम् ॥ १७ ॥

सञ्जय उवाच । घटोत्कचो यदा कर्णं न विशेषयते नृप । ततः प्रादुश्चकारोग्रमस्त्रमस्त्रविदाम्वरः ॥ १८ ॥ तेनास्त्रेण हयान् पूर्वं निहत्य तस्य राक्षसः । सारथिञ्चैव हैडिम्बः क्षिप्रमन्तर-धीयत ॥ १९ ॥

धृतराष्ट्र उवाच । तथा त्वन्तर्हिते तस्मिन् कूटयोधिनि राक्षसे । मामकैः प्रतिपन्नं तन्ममाचक्ष्व सञ्जय ॥ २० ॥

सञ्जय उवाच । अन्तर्हितं राक्षसं तं विदित्वा सम्प्राक्रोशन्

कुरवः सर्व्व एव। कथं नायं राक्षसः कूटयोधी हन्यात् कर्णं समरे पश्यमानः ॥ २१ ॥ ततः कर्णो लघुचित्रास्त्रयोधी सर्व्वा दिशो व्यावृणोद्बाणजालैः। न वै किञ्चिदप्यपश्यत भूतं तमोभूते सायकैरन्तरीक्षे ॥ २२ ॥ न चाददानो न च सन्दधानो न चेषुधी स्पृश्यमानः कराग्रैः। अदृश्यद्वै लाघवात् सूतपुत्रः सर्व्वं बाणै-श्छादयानोऽन्तरीक्षम् ॥ २३ ॥ ततो मायां विहितामन्तरीक्षे घोरां भीमां राक्षसीं दारुणेन। तां पश्यामो लोहिताभ्रप्रकाशां देदीप्यन्तीमग्निशिखामिवोग्राम् ॥ २४ ॥ ततस्ततो विद्युतः प्रादुरासन्नुल्काश्चापि ज्वलिताः कौरवेन्द्र। घोषश्चासीत् प्रादुरासीत् सुघोरः सहस्रशो नदतां दुन्दुभीनाम् ॥ २५ ॥ ततः शराः प्रापतन् रुक्मपुङ्खाः शक्तयः प्रासा मुषलान्यायुधानि। परश्वधास्तैलधौताश्च खड्गाः प्रदीप्ताग्राः पट्टिशास्तोमराश्च ॥ २६ ॥ मयूखिनः परिघा लोहबद्धा गदाश्चित्राः शितधाराश्च शूलाः। गुर्व्वी गदा हेमपट्टावनद्धाः शतघ्न्यश्च प्रादुरासन् समन्तात् ॥ २७ ॥ महाशिलाश्चापतंस्तत्र तत्र सहस्रशः साशनयश्च वज्राः। चक्राणि चानेकशतक्षुराणि प्रादुर्बभूवुर्ज्वलनप्रभाणि ॥ २८ ॥ तां शक्ति-पाषाणपरश्वधानां प्रासर्ष्टिवज्राशनिमुद्गराणाम्। वृष्टिं विशालां ज्वलितां पतन्तीं कर्णः शरौघैर्न शशाक हन्तुम् ॥ २९ ॥ शरा-हतानां पततां हयानां वज्राहतानाञ्च महागजानाम्। शस्त्रा-हतानाञ्च महारथानां महान्निनादः पततां बभूव ॥३०॥ सुभीम-नानाविधशस्त्रपातैर्घटोत्कचेनाभिहतं समन्तात्। दौर्य्योधनं तद्बलमार्त्तमासीदावर्त्तमानं ददृशे भ्रमत्तत् ॥ ३१ ॥ हाहाकृतं सम्परिवर्त्तमानं संलीयमानञ्च विषण्णरूपम्। ते चार्य्यभावात् पुरुषप्रवीराः पराङ्मुखा न बभूवुस्तदानीम् ॥ ३२ ॥ तां राक्षसीं घोरतरां सुभीमां वृष्टिं महाशस्त्रमयीं पतन्तीम्। दृष्ट्वा बलौघांश्च निपात्यमानान् महद्भयं तव पुत्रान् विवेश ॥ ३३ ॥ शिवाश्च

